क) प्रश्नाः —

१. दुहिता कस्य गृहं गच्छति ? २. माता कस्याः शिशुं लालयति ? ३. शिशवः कासां गानेन तुष्यन्ति ? ४. पत्नी कस्य आज्ञाम् अनुसरति ? ५. पुत्रः कस्य गृहात् काम् आनयति ? ६. यूयं कस्य शब्दमाकर्णयथ ? ७. वयं कस्याः क्षीरं पिबामः ?

ख) 'इदम्' शब्दस्य रूपैः वाक्यानि पूरयत—

१ — मम माता । ३ — शिशवः पांसुषु क्रीडन्ति ।
२ — कृष्णस्य दुहिता । ४ वयम् — फलानि खादामः ।

ग) उचितान्युत्तराणि वदत—(Give proper answers.)

१ त्वं कुत्र गच्छसि ?
२ त्वं कुत्र वससि ?
३ रामः कुत्र गच्छति ?
४ कौ तव पितरौ ?
५ तव भ्राता कः ?
६ किं ते नाम ?
७ कया त्वं लिखसि ?
८ कदा त्वं पाठं पठसि ?
९ त्वं कस्याज्ञामनुसरसि ?
१० तव स्वसा कुत्र पठति ?

---

माता *f* mother
दुहिता *f* daughter
पिता *m* father
भर्ता, पतिः *m* husband
पत्नी *f* wife
जामाता *m* son-in-law
स्वसा *f* sister
आज्ञा *f* order
शिशुः *m* child
गानम् *n* song
लालयति *P.* is fondling
तुष्यन्ति *P.* are pleased
अनुसरति *P.* follows
आकर्णयामः *P.* (we) hear
पांसुः *m* dust
भ्राता *m* brother

## दशमः पाठः ॥ १० ॥

काकः　　　　　　　　　　भेकः

| | | |
|---|---|---|
| आकाशम् । | वर्षाः । | वापी । |
| नीडम् । | नरः । | भूमिः । |
| दिवा । | देवः । | नक्तम् । |

काकः शाखायाम् उपविशति। स दिवा आकाशे डयते, नक्तं नीडे वसति। भेकाः वापीषु वसन्ति। ते वर्षासु रटन्ति। अयं भेकः भूमौ प्लवते। लतासु कुसुमानि विकसन्ति। वयं तरुषु फलानि पश्यामः। समुद्रे रत्नानि जायन्ते। नराः भूमौ वसन्ति। देवाः स्वर्गे तिष्ठन्ति ॥

क) प्रश्नाः—

१. काकः कस्याम् उपविशति ? २. स दिवा कुत्र डयते ? ३. स नक्तं कुत्र वसति ? ४. भेकाः कुत्र वसन्ति ? ५. ते कदा रटन्ति ? ६. अयं भेकः कुत्र प्लवते ? ७. कासु कुसुमानि विकसन्ति ? ८. यूयं केषु फलानि पश्यथ ? ९. रत्नानि कुत्र जायन्ते ? १०. भूमौ के वसन्ति ? ११. देवाः कुत्र तिष्ठन्ति ?

ख) 'लभ्' धातोः (to get) (आत्मने पदी) 'लट्' रूपाणि—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| प्र० पु. | ते | इते | अन्ते eg. | लभते | लभेते | लभन्ते |
| म० पु. | से | इथे | ध्वे | लभसे | लभेथे | लभध्वे |
| उ० पु. | ए | वहे | महे | लभे | लभावहे | लभामहे |

ग) 'लट्' रूपैः वाक्यानि पूरयत—१ पुत्राः पितुः धनं—(लभ्) २ भेकाः भूमौ—(प्लव्)। ३ खगाः आकाशे — (डय्) ॥

घ) Give difference in meaning.

१ तिष्ठति, उत्तिष्ठति। २ सरति, अनुसरति ॥

---

भेकः *m* frog
नीडं *n* nest
दिवा *in* during day time
वर्षाः *f* (Always Plural) rainy season
वापी *f* well
नक्तं *in* by night
उपविशति *P.* sits
डयते *A.* flies
वसति *P.* dwells
रटन्ति *P.* call out
प्लवते *A.* jumps up

## एकादशः पाठः ॥ ११ ॥

वीणा घण्टा

अत्र । तत्र । कुत्र ?

गायकः । परुषः । मधुरः ।

अत्र एका वीणा अस्ति । गायकः वीणां वादयति । घण्टा कुत्र वर्तते ? घण्टा तत्र वर्तते । रामः घण्टां वादयति । घण्टायाः स्वरः परुषः । वीणायाः स्वरः मधुरः ॥

मालती सम्यग् वीणां वादयति । मालविका मधुरं गायति । कोकिला वसन्ते मधुरं कूजति । गानेन सर्वे जनाः तुष्यन्ति ॥

क) प्रश्नाः—

१. कुत्र एका वीणा अस्ति ? २. कः वीणां वादयति ? ३. कः घण्टां वादयति ? ४. कस्याः स्वरः परुषः ? ५. कस्याः स्वरः मधुरः ? ६. का सम्यग् वीणां वादयति ? ७. का कदा मधुरं कूजति ? ८. केन सर्वे जनाः तुष्यन्ति ?

ख) 'तद्' शब्दस्य रूपैः वाक्यानि पूरयत—

१ — गायकः — वीणां वादयति ।
२ — नार्यौ सेकान् पश्यतः ।
३ — बालाः — फलानि भक्षयन्ति ।

ग) 'किं' शब्दस्य प्रथमा विभक्ति रूपाणि—

| | | | | |
|---|---|---|---|---|
| पुंलिङ्गे | (who) | कः | कौ | के |
| स्त्रीलिङ्गे | (who) | का | के | काः |
| नपुंसकलिङ्गे | (what) | किं | के | कानि |

घ) अर्थमेदं वदत—गच्छति, आगच्छति । नयति, आनयति ॥

ङ) विपरीत पदम् (opposite word) परुषः × मधुरः

———

घण्टा *f* bell
अत्र *in.* here
तत्र *in.* there
कुत्र *in.* where ?
गान *n* song
गायकः *m.* songster
परुषः *a. m.* harsh
वादयति *P.* plays on
सम्यग् *in.* well
वसन्तः *m.* the spring-[season
कोकिला *f.* cuckoo
सर्व *m.* All
मधुरः *a. m.* sweet
अस्ति *P.* there is

## द्वादशः पाठः ॥ १२ ॥

पुस्तकम्　　　　पेटिका

इह ।　　　　च ।　　　　वा ।

इह एकं पुस्तकम् एका पेटिका च स्तः । तत् कृष्णस्य 'शब्दमञ्जरी' पुस्तकम् । तस्य पुस्तकस्य मूल्यम् एको रूप्यकः । तस्मिन् पुस्तके द्विशतं पुटानि सन्ति । मम 'श्रीरामोदन्त' पुस्तके षष्टिः पुटानि सन्ति ॥

अस्यां पेटिकायां कानि वस्तूनि विद्यन्ते ? तस्यां पेटिकायां वस्त्राणि भूषणानि धनानि च विद्यन्ते । इयं हरेः पेटिका । स इमां कुञ्चिकया उद्घाटयति । कुञ्चिका हरेः गोपालस्य वा करे वर्तते ॥

क) प्रश्नाः—

१. इह के स्तः ? २. इदं कस्य पुस्तकम् ? ३. कृष्णस्य पुस्तकस्य किं मूल्यम् ? ४. कस्मिन् द्विशतं पुटानि सन्ति ? ५. तव पुस्तके कति पुटानि सन्ति ? ६. इयं कस्य पेटिका ? ७. कस्तां कया उद्घाटयति ? ८. कुञ्चिका कस्य करे वर्तते ?

ख) 'मम-वयम्' पदाभ्यां यथोचितं वाक्यानि पूरयत—

१ — धनम् आभरणानि च पेटिकायां रक्षामः ।

२ मालती — गृहमागत्य वीणां शिक्षयति ।

३ — गृहं नद्यास्तीरे वर्तते ।

४ — पाठान् यथाकालं पठामः ॥

ग) 'अस्' धातोः (to be) 'लट्' रूपाणि—

| | | | |
|---|---|---|---|
| 3rd Person—प्र. पु. | अस्ति | स्तः | सन्ति |
| 2nd Person—म. पु. | असि | स्थः | स्थ |
| 1st Person—उ. पु. | अस्मि | स्वः | स्मः |

घ) अस् धातोः 'लट्' रूपैः वाक्यानि पूरयत—

१ इह द्वौ अश्वौ — । २ वयं चत्वारः भ्रातरः— ॥

---

पेटिका *f* box
इह *in.* here. च *in.* and
वा *in.* or स्तः *P.* are
मूल्यं *n* price
रूप्यकः *m* a rupee
शतं *n* hundred
धन *n* wealth
पुटं *n* page
वस्तु *n* a thing
विद्यन्ते *A.* there are
भूषण *n* ornament
उद्घाटयति *P.* opens
वर्तते *A.* there is
कुञ्चिका *f* key
यथाकालं *in* in time
शिक्षयति *P.* teaches

त्रयोदशः पाठः ॥ १३ ॥

## नक्षत्राणि

यदा । तदा । कदा ?

तु । किन्तु । न । वत् ।

नक्षत्राणि कदा प्रकाशन्ते ? नक्षत्राणि रात्रौ प्रकाशन्ते। तानि दिवा न प्रकाशन्ते। मेघैः आवृते नभसि रात्रौ च न प्रकाशन्ते ॥

यदा सूर्यः अस्तम् अयते तदा ताराणि प्रकाशन्ते । तानि व्योम्नि हीरवत् द्योतन्ते । नक्षत्राणां राजा चन्द्रः । चन्द्रस्य प्रकाशः चन्द्रिका ।

अहं नक्षत्राणि गणयामि । किन्तु तानि गणयितुं न पारयामि । तानि असङ्ख्यानि वर्तन्ते । तत्र अश्विन्यादीनि सप्तविंशतिः नक्षत्राणि प्रधानानि ॥

क) प्रश्नाः—

नक्षत्राणि कुत्र प्रकाशन्ते? २. तानि कदा न प्रकाशन्ते? ३. तानि कुत्र हीरवत् द्योतन्ते? ४. केषां राजा चन्द्रः? ५. तस्य प्रकाशस्य नाम किम्? ६. त्वं किं करोषि? ७. कानि गणयितुं न पारयसि? ८. कुतः गणयितुं न पारयसि? ९. प्रधाननक्षत्राणि कानि? कति?

ख) 'त्वम्—तव' पदाभ्यां यथायोगं वाक्यानि पूरयत—

१ — नक्षत्राणि गणयसि। २ — पितरौ पुत्रीं लालयतः॥

ग) 'लट्' रूपैः वाक्यानि पूरयत—

१ वयं पीठेषु--(उपविश्)। २ अहम् अङ्गुलीः--(गण्)।
३ तृणानि नक्षत्राणि च असङ्ख्यानि—(अस्)।

---

नक्षत्रं *n* star
यदा *in.* when
तदा *in.* then
कदा *in.* when
तु, किन्तु *in.* but
न *in.* not
वत् *in.* like
प्रकाशन्ते *A.* shine
आवृते *a. n.* covered with
नभस् *n* sky
अस्तम् अयते *A.* sets
तारं *n* star
व्योमन् *n* sky
हीरवत् *in* like diamond
द्योतन्ते *A.* shine
चन्द्रिका *f* moon-light
गणयामि *P.* (I) count
पारयामि *P.* am able
असङ्ख्यानि *a. n.* countless
अश्विन्यादीनि *a. n.* beginning with अश्विनी*
सप्तविंशतिः *f* twentyseven
करोषि U. (you) do.

---

* अश्विन्यादि सप्तविंशति नक्षत्रणां नामानि ज्ञातव्यनि।

## चतुर्दशः पाठः ॥ १४ ॥

### भ्राता स्वसा च

ह्यः । श्वः । परश्वः । अद्य ।
वार्ता । तर्जनी

अत्र एकः बालकः एका बालिका च तिष्ठतः। तौ पाठालयात् आगच्छताम् । सा बालिका तस्य बालकस्य स्वसा । तौ किं कुरुतः ? तौ सँल्लपतः ॥

स बालकः ह्यः पाठं न अपठत् । उपाध्यायः तम् अताडयत् । तां वार्तां तस्य स्वसा पित्रे अकथयत् । पिता पुत्रं अभर्त्सयत । तेन कुपितः स बालकः स्वसारम् अनिन्दत् । सा भ्रातरं तर्जन्या तर्जयते ॥

राम ! अपि त्वम् अद्य प्रातः स्वसुः गृहम् अगच्छः ? आर्य ! अहं न अगच्छम् । श्वः परश्वो वा गमिष्यामि । ह्यः सायं त्वं किम् अकरोः ? ह्यः सायम् अहं पित्रा सह विपणिम् अगच्छम् ॥

क) प्रश्नाः —

१. अत्र कौ तिष्ठतः ? २. तौ कुतः आगच्छताम् ? ३. सा बालिका का ? ४. कः ह्यः पाठं न अपठत् ? ५. कः तम् अताडयत् ? ६. तां वार्तां का पित्रे अकथयत् ? ७. कः पुत्रमभर्त्सयत ? ८. तेन कुपितः स बालकः किम् अकरोत् ? ९. सा भ्रातरं किं करोति ? १०. त्वं कदा स्वसुः गृहं गमिष्यसि ? ११. त्वं कदा विपणिमगच्छः ?

ख) 'एतद्' शब्दस्य लिङ्गत्रयेऽपि प्रथमाविभक्ति रूपाणि—

| | | | |
|---|---|---|---|
| पुंलिङ्गे— | एषः | एतौ | एते |
| स्त्रीलिङ्गे— | एषा | एते | एताः |
| नपुंसकलिङ्गे— | एतत् | एते | एतानि |

ग) 'एतद्' शब्दस्य रूपैः वाक्यानि पूरयत—

| | | |
|---|---|---|
| १ — मम भ्राता । | ४ — कपी । | ७ — धेनवः । |
| २ — तव स्वसा । | ५ — कशे । | ८ — तरवः । |
| ३ — पुस्तकम् । | ६ — फले । | ९ — नीडानि ॥ |

---

ह्यः *in* yesterday
श्वः *in* to-morrow
परश्वः *in*. the day-after to-morrow
अद्य *in*. to-day
वार्ता *f* news
तर्जनी *f* the fore-finger
बालकः *m*. boy.

गमिष्यामि *P*. (I) shall go
बालिका *f* girl
सँल्लपतः *P*. converse
अकथयत् *P*. told
अभर्त्सयत *A*. threatened
अनिन्दत् *P*. abused
तर्जयते *A*. threatens
विपणिः *f* a. market.

ह्यः श्वः ?

## पञ्चदशः पाठः ॥ १५ ॥

### हस्तौ

वामहस्तः । दक्षिणहस्तः । अङ्गुली ।

राम ! उत्तिष्ठ । तव हस्तौ दर्शय । त्वं केन हस्तेन लिखसि ? आर्य ! अहम् अनेन हस्तेन लिखामि । स दक्षिणहस्तः । अन्यः वामहस्तः । एकस्मिन् हस्ते पञ्च अङ्गुल्यः सन्ति । द्वयोः हस्तयोः दश अङ्गुल्यः सन्ति । पाणौ विविधाः रेखाः विद्यन्ते ॥

रामः उपविशतु । कृष्णः उत्तिष्ठतु । कृष्ण ! त्वं हस्ताभ्यां नेत्रे स्पृश । वयं नेत्राभ्यां किं कुर्मः ? वयं नेत्राभ्यां पश्यामः । हस्ताभ्यां कर्माणि कुर्मः । अन्येषां प्राणिनां द्वे नेत्रे विद्येते ; हस्तौ न स्तः ॥